स० ३८

सत्यमेवनसंशयः ईप्सितंचफलंभुक्त्वाचांतेसत्यपुरंव्रजेत् ॥ १२
इतिवःकथितंविप्राःसत्यनारायणव्रतं यत्कृत्वासर्वदुःखेभ्योमुक्तो
भवतिमानवः ॥ १३ ॥ विशेषतःकलियुगेसत्यपूजाफलप्रदा केचि
त्कालंवदिष्यंतिसत्यमीशंतमेवच ॥ १४ ॥ सत्यनाराय केचित्सदे
वंतथापरे नानारूपधरोभूत्वासर्वेषामीप्सितप्रदः ॥ १५ ॥ भविष्य
तिकलौसत्यव्रतरूपीसनातनः यइदंपठतेनित्यंशृणोतिमुनिसत्त
माः ॥ १६ ॥ सत्यंनश्यंतिपापानिसत्यदेवप्रसादतः ॥ १७ ॥ इति
श्रीस्कंदपुराणेरेवाखंडेश्रीसत्यनारायणव्रतकथायांपंचमोऽध्यायः

क०

तस्यपुत्रशतंनष्टंधनधान्यादिकंचयत् सत्यदेवेनतत्सर्वंनाशितंमम
निश्चितं ॥ ६ ॥ अतस्तत्रैवगच्छामियत्रदेवस्यपूजनं मनसातुवि
निश्चित्ययय़ौगोपालसन्निधौ ॥ ७ ॥ ततोऽसौसत्यदेवस्यपूजांगोप
गणैःसह भक्तिश्रद्धान्वितोभूत्वाचकारविधिनान्नृपः ॥ ८ ॥ सत्यदे
वप्रसादेनधनपुत्रान्वितोऽभवत् इहलोकेसुखंभुक्त्वाचांतेसत्यपुरं
ययौ ॥ ९ ॥ यइदंकुरुतेसत्यव्रतंपरमदुर्लभं शृणोतिचकथांपुण्यां
भक्तियुक्तःफलप्रदां ॥ १० ॥ धनधान्यादिकंतस्यभवेत्सत्यप्रसादतः
दरिद्रोलभतेवित्तंबद्धोमुच्यतेबंधनात् ॥ ११ ॥ भीतोभयात्प्रमुच्येत

स० ३१

नांतिगुणारूपंतवाश्चर्यमिदंप्रभो ॥ १४ ॥ मूढोऽहंत्वांकथंजाने मोहितस्तवमायया प्रसीदपूजयिष्यामियथाविभवविस्तरैः ॥१५ पुराविसंचतत्सर्वंत्राहिमांशरणागतं श्रुत्वाभक्तियुतंवाक्यंपरितुष्टोजनार्दनः ॥ १६ ॥ वरंचवांछितंदत्वातत्रैवांतर्दधेहरिः ततोनावं समारुह्यदृष्ट्वावित्तप्रपूरितां ॥ १७ ॥ कृपयासत्यदेवस्यसफलंवांछितंमम इत्युक्त्वास्वजनैःसार्द्धंपूजांकृत्वायथाविधि ॥ २८ ॥ हर्षेणचाभवत्पूर्णःसत्यदेवप्रसादतः नावंसंयोज्ययत्नेनस्वदेशगमनं कृतं ॥ १९ ॥ साधुर्जामातरंप्राहपश्यरत्नपुरींमम दूतंचप्रेषयामा

०क

सानिजवित्तस्यरक्षकं ॥ २० ॥ दूतोऽसौनगरंगत्वासाधुभार्यांवि
लोक्यच प्रोवाचवांछितंवाक्यंनत्वाबद्धांजलिस्तदा ॥ २१ ॥ निकटे
नगरस्यैवजामात्रासहितोवणिक् आगतोबंधुवर्गैश्चवित्तैश्चबहुभि
र्युतः श्रुत्वादूतमुखाद्वाक्यंमहाहर्षवतीसती सत्यपूजांततःकृत्वाप्रो
वाचतनुजांप्रति ॥ २३ ॥ व्रजामिशीघ्रमागच्छसाधुसंदर्शनायच।
इतिमातृवचःश्रुत्वाव्रतंकृत्वासमाप्यच ॥ २४ ॥ प्रसादंचपरित्य
ज्यगतासापिपतिंप्रति तेनरुष्टःसत्यदेवोभर्त्तारंतरणींतथा ॥ २५
संहृत्यचधनैःसार्द्धंजलेतस्यावमज्जयत् ततः कलावतीकन्यानवि

श्रीगणेशायनमः ॥ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतं मर्त्यंच । हिरण्ययेनसवितारथेनदेवोयातिभुवनानिपश्यन् ॥ १ सूर्यायनमः ॥ आवाहयामि गंधाक्षतपुष्पंसमर्पयामि एवंसर्वं त्र ॥ इमंदेवाअसपत्नᳬसुवध्वं महतेक्षत्रायमहतेज्यैष्ठ्याय महते ज्यानराज्यायेंद्रस्येंद्रियाय। इममसुष्यपुत्रममुष्यैपुत्रमस्यैविशएष वोमीराजासोमोऽस्माकंब्राह्मणानाᳬराजा ॥ २ ॥ चंद्रायनमः ॥ अग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्याअयं ॥ अपाᳬरेताᳬसिजिन्व ति ३ ॥ भौमायन० ॥ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसᳬ

स॰ २

सृजेथामयंच । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवायजमानश्च

सीदत ॥ ४ ॥ बुधायनमः ॥ बृहस्पतेअतियदर्य्योअर्हाद्युमद्विभा

तिक्रतुमज्जनेषु । यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहि

चित्रं ॥ ५ ॥ बृहस्पतयेन॰॥ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिब

त्क्षत्रंपयःसोमंप्रजापतिः । ऋतेनसत्यमिंद्रियंविपानꣳशुक्रमंधस

इंद्रस्येंद्रियमिदंपयोमृतंमधु ॥ ६ ॥ शुक्रायन॰ ॥ शन्नोदेवीरभि

ष्टयआपोभवंतुपीतये । शंयोरभिस्रवंतुनः ॥ ७ ॥ शनैश्चराय॰

कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता ॥ ८ ॥

पु॰